# सप्तशतीसर्वस्वम्

नाम

## नानाविधसप्तशतीरहस्यसंग्रहः ।


जयपुरमहाराजाश्रितेन द्विवेदोपाख्येन

पण्डितश्रीसरयूप्रसादशर्मणा


संगृहीतः ।

स च


लक्ष्मणपुरे

'बाबू मनोहरलाल भार्गव बी. ए.' इत्यस्य प्रबन्धेन

नवलकिशोरयन्त्रालये

मुद्रितः ।





१९१६ ई०

# द्वितीयसंस्करणसूचना।

अथास्य खलु सप्तशतीसर्वस्वस्य प्रथममुद्रणावसरे यत्र क्वापि त्रुटिरभूत्; तत्पूर्त्यै श्रीमत्तातपादैरेवैकं प्राङ्मुद्रितं पुस्तकं संशोधयितुमुपक्रान्तम्। तच्च संशोधनम् क्वचित् स्वहस्तेनैव कृतम्, शरीरशैथिल्यवशात् क्वचिदादेशेन कारितम्, अन्ते किंचिदवशिष्टं मयकाचरितमिति।

अथ परिचयार्थं प्रयागस्थ-इण्डियन्मुद्रणालये मुद्रितायाः श्रीमातृकास्तुतेः सकाशात्तदीयं वृत्तजातमुद्धृत्य स्थलविशेषे किंचित्परिवर्त्य संवर्ध्य च पाठकानां प्रमोदाय निवेशितमिति।

तदेतत्पुस्तकं सकलगुणरत्नैकभुवा मुंशीनवलकिशोरतनयेन रायवहादुरबाबूश्रीप्रयागनारायणमहाशयेन स्वयन्त्रालये पुनः प्रकाशितमिति निवेदयते।

शरत्पूर्णा<br>संवत् १९७२ } दुर्गाप्रसादद्विवेदी.

श्रीगणेशाय नमः।

अथ सप्तशतीसर्वस्वनिर्मातॄणां पण्डितश्री-
सरयूप्रसादद्विवेदानां

# परिचयः।

वन्दे बोधमयं नित्यं गुरुं शंकररूपिणम्।
यमाश्रित्य हि वक्रोऽपि चन्द्रः सर्वत्र वन्द्यते॥

(श्रीतुलसीदासः)

विद्वांसोऽप्यथ योगिनोऽपि कतिचित्सन्त्येव सन्तः परं
तत्सामान्यविशेषभावकथने लोकोऽन्यथा मन्यते।
अस्तु श्रीसरयूप्रसादविबुधादन्यो न शैवागम-
ग्रन्थग्रन्थिविभेदनेऽद्य मतिमानित्युच्चकैर्ब्रूमहे॥

अयं महात्मा द्विनवत्युत्तराष्टादशशततमे १८९२ वैक्रमाब्दे सांप्रतिकायोध्यापुरीसंनिवेशात्[1] पश्चिमायां दिशि ८ अष्टक्रोशान्तरे वासिष्ठ्याः सरयूनद्या दक्षिणे तीरे 'सनाह' ग्रामे समुत्पन्नः।

अस्य पिता—राधाकृष्णशर्मा, पितामहः—वेणीरामशर्मा, प्रपितामहः—जीवरामशर्मा, पण्डिताः। जातिः—सरयूपारीणब्राह्मणः। उपाख्या—द्विवेदी, गोत्रं—काश्यपः। प्रवरः—काश्यपाङ्गिरसनैध्रुवसंज्ञः। वेदः—शुक्लयजुः। शाखा—माध्यन्दिनी। सूत्रं—कात्यायनपारस्करौ।

अयं पितृचरणात् स्वदेशे यतस्ततश्च विद्यामधीतवान्। लोका-

---

१ अयोध्यापुर्याः प्राचीनसंनिवेशप्रमाणं तु भगवता वाल्मीकेन रामायणे बालकाण्डे पञ्चमसर्गे प्रत्यपादि 'मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्। आयता दश च द्वे च योजनानि महापुरी। श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा॥' इति।

न्वस्मुपराते पितरि एकादशोत्तरैकोनविंशतिशततमे १९११ वैक्रमाब्दे पश्चिमदिग्यात्रां कृतवान् । विधिवशाच्छनकैर्विश्ववार-(पेशावर) पुरं यावदभ्रमत्। ततोपि भ्रमञ्जालन्धरपीठसंगतं[1] 'काँगडा' नगरमाशिश्रियत् । श्रीमद्व्रजेश्वरीशरणसुभगे तत्र प्राक्तन-संस्कारवशंवदमानसो विगतगृहचिन्तः श्रीमतो दुर्गानन्दपादान्मन्त्रदीक्षां गृहीतवान् । तदन्तिके परिशीलितयदृच्छालाभवृत्तिः सार्धं वर्षषट्कं तपश्चरितवान् ।

तत इतस्ततः प्रवृत्तिगन्धमाघ्राय तत्र गृहेभ्य आगतायां गृहिण्यां श्रीगुर्वनुज्ञया स्वजन्मभूमिमगात् । दायादकलहकारणात्तामेकान्ततः परित्यज्य तत्प्रतीच्यां क्रोशद्वयान्तःपातिनि सरयूसरित्तीरे 'थरेरू' नामनि ग्रामेऽवात्सीत् । यत्र खलु दुर्गाप्रसादाख्यस्य तनयस्य विंशत्युत्तरैकोनविंशतिशततमे १९२० वैक्रमाब्दे जन्माभूत् । इहापि निवसन्पुनर्बहुत्र विविक्तस्थले प्रायो देवाराधनप्रसङ्गेन समयमत्यवाहयत् ।

अथ स 'थरेरू' ग्रामतो दक्षिणस्यां दिशि क्रोशद्वयान्तरे तमसासरयूमध्यगतं संस्थानमकल्पिष्ट । यच्च पश्चात्पण्डितपुरीत्याख्ययाऽप्रथिष्ट ।

स लक्ष्मण (लखनऊ) पुरमण्डले यत्र तत्र निवसन्ननेकजनताख्यातमाशस्त्यं भगवच्चन्द्रमौलिमूर्त्तिसनाथं 'रुखार' संज्ञितं विपिनप्रायं प्रदेशमीश्वराराधनधियाऽशिश्रियत ।

ततः स 'इटौंजा' नगराधीश्वरेण सम्पन्निपद्यशोविसरसौरभविकस्वरेण पामार (पवाँर) वंशमौक्तिकेन महाराजश्रीरत्नसिंह[2]-

१ न्यासप्रकरणे पञ्चाशत्पीठेषु परिगणितं जालन्धरपीठं तथान्यत्रापीति दिक् ।

२ एतत्तनूजन्मा महाराजश्रीइन्द्रविक्रमसिंहदेव इदानीं विराजते ।

देवेन—तत्कनिष्ठेन भगवच्चन्द्रचूडचरणाराधनैकतानमानसेन बाबूश्रीगुमानसिंहदेवेन[1] च सविशेषमाहूतः कंचित्कालं तदन्तिकमासाद्यमध्युवास ।

अथास्मै विद्वन्मणये युधिष्ठिर इव धर्मभक्तिर्बाबूश्रीगुमानसिंहदेवो 'रुखार'[2] संनिविष्टां भूमिं प्रादात् । यत्र भूमात्रेनेन विद्वन्मणिना महता प्रबन्धेन दातृप्रतिग्रहीतृसुकृतकीर्तिवल्लरीपरिबृंहणायाम्रतरुप्रधाना वाटिका न्ययोजि भगवच्चन्द्रचूडप्रणयिनी[3] ।

स लक्ष्मणपुरप्रान्ते बहुषु स्थलेषु निवसन्नुपगोमतीतीरं चण्डी-[4] ( चाँदनकूँड़ा ) इत्याख्यया व्यपदिश्यमानं निर्जनस्थानं स्वविश्रमायानुमोदितवान् । तत्र यथावसरं तपांसि चरन् प्राङ्निर्मूर्तिकं चण्डिकाचत्वरं प्रतिमानिवेशनेन समूर्तिकं संपादितवान् । यद्दर्शनार्थमधुना प्रचुरा जनता प्रतिदर्शमागच्छति ।

विदितमहिमानममुं लक्ष्मणपत्तनं नातिचिरादधितिष्ठन् मुनशीनवलकिशोरमहाभागः स्वसमीपावासार्थं प्रार्थयत । तदानीं स महात्मा तन्नगराद् बहिः 'बादशाहबाग' संज्ञकारामे द्वित्रवर्षाणि न्यवसत् । तत्र संग्रहशिरोमणिसमाख्यं ज्योतिःशास्त्रीयं, सदाचारप्रकाशसंज्ञं धर्मशास्त्रीयं निबन्धमबध्नात् । यौ ( १८७५ तथा १८८३ ) ईसवीकाले मुनशी महोदयः स्वयन्त्रालयेऽमुद्रयत् ।

---

१ एतत्तनूजन्मा बाबूश्रीभगवानबख्शमहोदय इदानीं शोभते ।

२ इदं परममाहेश्वरस्य बाणासुरस्य निकेतनमिति तत्रत्योक्तिः ।

३ श्रीशिवलिङ्गसनाथेत्यर्थः ।

४ 'विविक्ततरगोमतीजठरमध्यसिद्धाश्रमां पुरोगतसरोवरस्फुरदगाधपाथश्छटाम् । विशालतलतुङ्गभूलुलितनिम्बमूलालयां भजामि भयखण्डिकां सपदि चण्डिकामम्बिकाम् ॥' इत्यादिरस्याः प्राक्तिकः स्तवः ।

अथ स मुनशीमहाशयो महात्मानममुं १९३२ वैक्रमाब्दे राजस्थान ( राजपूताना ) भूषणभूतजयपुरमहीमहेन्द्रस्य श्रीमन्महाराजाधिराजरामसिंहदेवस्य भुजच्छायमगमयत् । तदाप्रभृति जयपुरे स महात्मा राजराजतो लब्धजीविकः १९५१ वैक्रमाब्द-पर्यन्तमुषितवान् । एतस्मिन्समये आगमरहस्यसर्वार्थकल्पद्रुम-[1] सप्तशतीसर्वस्व-परशुरामसूत्रवृत्ति-वर्णबीजप्रकाशप्रबन्धान्कृतवान्, भगवज्जगदीश-बदर्याश्रमादिकं सभाजितवांश्च ।

अथ ( अफीम-कमीशन ) प्रसङ्गेन जयपुरराजधानीमागतो दरभङ्गानरेशः श्रीलक्ष्मीश्वरसिंहमहाराजः कर्णाकर्णि तमाकर्ण्य स्वपार्श्वे रहस्याह्वयत । कतिपयप्रश्नोत्तरप्रदानेन समीक्षितयोग्यताकं स्वनगरागमनाय प्रार्थयत । आगमने विलम्बमाकलय्य पत्रतडित्समाचारादिनात्वरत । तथोपासितः सोऽपि श्रीमज्जयपुरमहेन्द्राज्ञया निजात्मजं दुर्गाप्रसादशर्माणं राजकीयसंस्कृतपाठशालायामध्यापनकर्मणि समनुमत्य दरभङ्गाराजधानीं गतवान् । तत्र विचक्षणशिरोमणे राज्ञः सविधे वर्षद्वयीं यापितवान् । तदन्तरे प्रत्यभिज्ञादिसारसमलंकृतं साधकसर्वस्वं संकलितवान् । अत्रा

---

१ मन्त्रशास्त्रव्युत्पादको द्वादशसहस्रश्लोकात्मको निबन्ध आगमरहस्यम् । अथर्ववेदीयपिप्पलादशाखाप्रतिपादितकृत्यासूक्तविवरणं सर्वार्थकल्पद्रुमः । 'सप्तशत्यास्तु सर्वस्वं सर्वस्वं तन्त्रमन्त्रयोः । येनोद्घाटि सर्वस्वं सर्वस्वमिव भूतलात् ॥ ' इति ग्रन्थकृदुक्तस्वरूपम् । श्रीविद्याप्रतिपादको ग्रन्थः परशुरामसूत्रवृत्तिः । 'स व्यधाज्जामदग्नीयसूत्राणामृजुपद्धतिम् । यत्र संचर्यते सम्यग् बालैरप्यकुतोभयम् ॥ ' इति ग्रन्थकृदुक्तिश्च । वैष्णवशैवशाक्तगाणेशसौराणामन्येषां चोपकारको वर्णमातृकाक्रमेण निर्मितो मन्त्रोद्धारोपयुक्तः कोशो वर्णबीजप्रकाशः ( अयं मुम्बापुर्यां वेङ्कटेश्वरयन्त्रालये मुद्रितः ) ।

वसरे तत्रत्यमारुतपानीयप्रातिकूल्येन कायिककार्श्यमाप्तवान् ।

अथ 'बारावंकी' मण्डलान्तर्गत-लाखूपुरपरिवृढः श्रीसर्वजित्सिंहमहोदयः शाकद्वीपीयद्विजन्मा तमात्मदेशावासार्थमत्यर्थं प्रार्थयत । तथाभूतः स महात्मा दरभङ्गाभूभुजि देशान्तरप्रणयिन्येव सांप्रतिकायोध्यासीमातः पश्चिमाशायां नातिदूरे भगवद्वाल्मीकि[1]वाक्यबलेनायोध्यान्तरभूतं स्वभुजोपार्जितं पण्डितपुर्याख्यसंस्थानमगृह्णात् ।

अत्र स्वकनिष्ठस्य शिवाराधनपवित्रान्तःकरणस्य नन्दकिशोर[2]शर्मणः पण्डितस्य द्वारेण जगज्जननीपीठसंभूतैर्विन्ध्यपाषाणैरेकं कूपारामसंनिकर्षे लघुशिवमन्दिरमकारयत् । यत्र जगतां मातापितरौ पार्वतीपरमेश्वरौ विराजतः ।

इह सानन्दं समयाकुर्वन्स ललिताम्बिकानामसाहस्रवृत्ति-दीक्षापद्धति-पादुकापञ्चकादिकतिपयस्तवव्याख्या निरमात् ।

अथ स क्रमेण संकोचिताहारप्रक्रियो गोदुग्धमात्राशनः परिक्षीणकायः क्षितितलरचितशयनीयः समाचरितावसानिकवितरणः सन् १९६३ त्रिषष्ट्युत्तरैकोनविंशतिशततमे वैक्रमाब्दे कार्त्तिककृष्णषष्ठ्यां सोमे सार्धं सौरमण्डलेन सहान्तर्धातुं त्वरमाण इव सहसा समीपवर्तिनमासनकल्पनार्थमादिशत् । कल्पिते च कृष्णाजिनप्रधाने विष्टरे परित्यक्तमिदं शयनीयमित्यागच्छन्तं वैष्णवप्रकाण्डं शिवरत्न[3]सिंहवर्माणमभिधाय प्रणमति तस्मिन् 'अखण्डा

---

१ अत्र प्रमाणवाक्यं प्राङ् निर्दिष्टम् ।

२ अस्य जन्मकालः संवत् १९०६ निधनकालः संवत् १९६२ ।

३ अस्य क्षत्रियप्रकाण्डस्य जन्म संवत् १८९२ माघमासीयामायाम् ।

भक्तिर्भगवति रामचन्द्रे भवतात्' इत्यभिधाय सालम्बमुदतिष्ठत्।

अथो विष्टर उपविष्ट एव नासाग्रदृष्टिः प्रायो होरातुरीयांशेन ब्रह्मभूयमगात्।

तदानीमुत्तराधिकारिणः सर्वे समुपस्थिता आसन्। तथाहि—पुत्रः षड्विंशत्या अहोभ्यः प्राग् जयपुरराजधानीतः समागतः। पौत्रस्तु पञ्चमास्याः पूर्वं जयपुरादागतः। शिष्याद्यपि[1] संनिहितमभूदिति शिवम्।

---

१ पण्डितचण्डीदत्त-शिवप्रसाद-हनुमद्दत्त-ब्रह्मदत्तप्रभृतयः शिष्यास्तु प्रागेव स्वर्गप्रणयिनोऽभूवन्।

श्रीगणेशाय नमः ।

# सप्तशतीसर्वस्वस्य भूमिका ।

सुप्रसिद्धमेवास्ति, यत्खलु नानाविधसत्कर्मप्रकर्षेऽमुष्मिन्भारतवर्षेऽनादिकालप्रवर्तमानः सकलपुरुषार्थसाधकः सप्तशतीस्तवो मनोविषयातिगाभिलाषसंपादकत्वेन चिन्तामणि-कामधेनु-कल्पवृक्षानतिशेते । अत एवायमहरहरुच्चावचपरिपाटीपुरःसरं तत्तद्विषयवास्तव्यैरास्तिकपुङ्गवैः सादरं पठ्यते । अतश्चात्र नानाविधाः पाठभेदाः संप्रदायभेदाच्चोपलभ्यन्ते । नन्वमुष्याम्नायवन्मन्त्ररूपत्वात् 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः[1] स्वरतोऽपराधात् ॥' इत्यादिनीत्या वर्णमात्रव्यत्यासस्याप्यङ्गवैगुण्यप्रयोजकत्वादीहितार्थसार्थमूलच्छेद एव फलितो न तावदैहिकामुष्मिकफलोदय-

१ अत्रेयमाख्यायिका—पुरा किल विश्वरूपाख्ये त्वष्टुःपुत्रे महेन्द्रेण हते सति कुपितस्त्वष्टा महेन्द्रस्य हन्तारं वृत्राख्यं पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवान् । तत्र च इन्द्रस्य शातयिता शत्रुः, हिंसक इति यावत् । तथाभूतः सन् वर्धस्वेति प्रतिपादयितुं 'इन्द्रशत्रुर्वर्धस्व' इति प्रयुक्तम् । इन्द्रशत्रुत्वस्य विधेयत्वान्न संबोधनाविभक्तिः । एवं स्थिते इन्द्रशत्रुशब्दे तत्पुरुषसमासप्रयुक्तेऽन्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तः किलोक्तः । तथा च पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थो लब्धः ।

संभावनाभासोऽपीति चेत् । न । संप्रदायभेदेन तत्तच्छाखामन्त्रभेदत्वादिहापि फले वैषम्याभावस्याङ्गीकारात् । अत एवाह भगवान् भाष्यकारः- ' एकशतमध्वर्युशाखाः[1], सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं[2], नवधाथर्वणो वेदः ' इति । अथातिक्रामति कालचक्रेऽमुष्य गुणगरिम्णाऽनेकविधा गौडदाक्षिणात्यसंप्रदायगतपाठपरिचायिकाष्टीकाष्टिप्पण्यश्च संजाताः । तत्र सांप्रतमेता उपलभ्यन्ते-

( १ ) शान्तनवी, शंतनुप्रणीता ।

( २ ) पुष्पाञ्जलिः, लालमणिमिश्रविरचितः ।

( ३ ) रामाश्रमी, रामाश्रमाचार्यकृता ।

( ४ ) नागेशी, नागेशभट्टरचिता ।

( ५ ) गुप्तवती, भास्कररायगुम्फिता ।

( ६ ) दंशोद्धारः, काशिनाथशास्त्रिकल्पितः ।

( ७ ) दुर्गाप्रदीपः, नीलकण्ठस्वामिग्रथितः ।

एवं चतुर्भुजमिश्र-भीमभट्टादिप्रणीता अन्येऽपि टीकाग्रन्थाः प्राप्यन्ते । सप्तशतीस्तवसंबन्धिनः क्षुद्रकायाः शुद्धा अशुद्धा नानाविधाः प्रयोगविधयोऽपि तत्र तत्रोपलभ्यन्ते । एतासु टीकासु प्रथमा, केवलव्याकरणांशप्रचुरा । दृश्यते चात्र भूयान्पाठभेदः ।

---

१ अध्वर्युर्यजुर्वेदः ।

२ बह्वृचानामाम्नायो बाह्वृच्यम् । ' छन्दोगौथिक-' इत्यादिना ञ्यप्रत्ययः ।

द्वितीया, व्याकरणयोजनपुरःसरं नानाविधान्हृदयंगमानर्थानाविष्करोति । पाठविसंवादांश्च परिहरति । किं बहुना, निजलेखपाटवेन सर्वानपि सप्तशतीटीकाग्रन्थानधरीकुरुते । तृतीया, सामान्यापि कुत्रचित्सम्यङ्मूलं योजयति । चतुर्थी विख्यातगुणगौरवा । पञ्चमी, केवलमन्त्राशयप्रकाशिका गूढप्रमेयांशा च । षष्ठी, विपमार्थद्योतनिका । सप्तमी, कतिपयप्रयोगविधिप्रदर्शिका शाक्तितत्त्वनिश्चायिका च वर्तते ।

इत्थं च स्फुटं परिणमति, यत्खलु कयाचिदप्येकया साकल्येन सप्तशतीप्रमेयांशो नावगन्तुं शक्यत इति हेतोर्वसेन मया नानाविधांस्तट्टीकाग्रन्थान्, कात्यायनीतन्त्र-घटतन्त्र-डतन्त्र-मेरुतन्त्र-मरीचिकल्प-चिदम्बरसंहितादीनागममूलग्रन्थांश्च निपुणं पर्यालोच्य सप्तशतीसर्वस्वनामधेयोऽसौ ग्रन्थोऽग्रन्थि ।

अत्र ग्रन्थे त्रयो भागा वर्तन्ते । तत्र प्रथमभागे—शाक्तिप्राधान्यप्रतिपादनम्, पाठक्रमनिर्णयः नवार्णार्थमीमांसा, सव्याख्यानि कवचार्गलाकीलकानि, सभाष्यं रात्रिसूक्तं च वर्तते ।

द्वितीयभागे—व्याकरणादिप्रमाणपुरस्सरं त्रयोदशाध्यायानां व्याख्यानम् । तत्र गौडपाठा मूले दाक्षिणात्यपाठाष्टीकायां च न्यस्ताः । प्रत्याध्यायप्रारम्भे मन्त्रविभागो दर्शितः ।

तृतीयविभागे—सभाष्यं देवीसूक्तम्, सविवरणं रहस्यत्रयम्, खिलमार्कण्डेयोक्तमुपासनाकाम्यप्रयोगादि, तन्त्रोक्तं दीपदानादि, मन्त्रन्यासध्यानादि चास्ते ।

अथ यथामति परिष्कृत्यादो ग्रन्थरत्नं सी. आई. ई., पदभूषिताय भार्गवकुलकुमुदिनीचन्द्राय सौजन्यामृतसागराय परोपकारनिरताय श्रीयुतमुंशीनवलकिशोरमहोदयाय समर्पितम् । तेनाप्युत्साहभाजा लक्ष्मणपुरे स्वकीये यन्त्रालये मुद्रापितं च ।

सोऽयमास्माकीनः परिश्रमो गुणैकपक्षपातिनां सौजन्यामृतपरिप्लुतान्तःकरणानामास्तिकसत्तमानां विद्वज्जनानामुपकारायानन्यप्रसादाय च भविष्यतीति संभावयति ।

( १ । ७ । १८९२ । )
( जयपुरे )

द्विवेदोपाख्यः
सरयूप्रसादशर्मा ।

ओमथ

# सप्तशतीसर्वस्वस्य सूचीपत्रम् ।

१ कण्ठपाठाभ्यासार्थमियमनुक्रमणिका । एवं पूर्वोत्तराङ्गयोरपि ।

# अथ सप्तशतीमालामन्त्रस्य प्रकरणसूची ।

प्रथमाध्यायरूपं मधुकैटभनाशाख्यं श्रीमहाकालीचरितं प्रथम चरित्रम् ।

तत्र—

'विश्वेश्वरीं जगद्धात्रीं—' इत्येतदादिः 'हन्तुमेतौ महासुरौ' इत्येतदन्ता ब्रह्मस्तुतिः । इदमेव रात्रिसूक्तम् ।

द्वितीयाध्यायादिचतुर्थाध्यायान्तमध्यायत्रयात्मकं महिषासुरघातनाख्यं श्रीमहालक्ष्मीचरितं मध्यमचरित्रम् ।

तत्र—

'ऋषिरुवाच । शक्रादयः—' इत्येतदादिः 'तैरस्मान् रक्ष सर्वतः' इत्येतदन्ता देवस्तुतिः । इह 'शूलेन पाहि नो देवि—' इत्यादिश्लोकमन्त्रचतुष्टयं कवचम् ।

पञ्चमाध्यायादित्रयोदशाध्यायान्तमध्यायनवकात्मकं शुम्भनिशुम्भवधाख्यं श्रीमहासरस्वतीचरितमुत्तरचरित्रम् ।

तत्र—

'देवा ऊचुः । नमो देव्यै महादेव्यै—' इत्येतदादिः 'सर्वापदो भक्तिविनम्रमूर्तिभिः' इत्येतदन्तं देवीसूक्तम् ।

'ऋषिरुवाच । देव्या हते तत्र—' इत्येतदादिः 'लोकानां वरदा भव' इत्येतदन्ता नारायणीस्तुतिः ।

'ऋषिरुवाच । ज्ञानमस्ति समस्तस्य—' इत्यादिः 'सैव सर्वेश्वरेश्वरी' इत्यन्ता प्रथमाध्यायोक्ता; तथा 'ऋषिरुवाच । एतत्ते कथितं भूप—' इत्यादिः 'भोगस्वर्गापवर्गदा' इत्यन्ता त्रयोदशाध्यायोक्ता ब्रह्मर्षिकृता स्तुतिः

# अथ सप्तशत्याः श्लोकमन्त्रगणना ।

| अध्यायाङ्काः | | श्लोकाङ्काः | | मन्त्राङ्काः |
|---|---|---|---|---|
| १ | ... | ७८ | ... | १०४ |
| २ | ... | ६८ | ... | ६९ |
| ३ | ... | ४१ | ... | ४४ |
| ४ | ... | ३६ | ... | ४२ |
| ५ | ... | ७६ | ... | १२९ |
| ६ | ... | २० | ... | २४ |
| ७ | ... | २५ | ... | २७ |
| ८ | ... | ६१॥ | ... | ६३ |
| ९ | ... | ३९ | ... | ४१ |
| १० | ... | २७॥ | ... | ३२ |
| ११ | ... | ५०॥ | ... | ५५ |
| १२ | ... | ३८ | ... | ४१ |
| १३ | ... | १७॥ | ... | २९ |
| | | ५७८ | | ७०० |

अङ्गषट्कस्य श्लोकगणना—

कवचश्लोकाः = ५०॥

अर्गलाश्लोकाः = २३

कीलकश्लोकाः = १४

प्राधानिकरहस्यश्लोकाः = ३०॥

वैकृतिकरहस्यश्लोकाः = ३९

मूर्तिरहस्यश्लोकाः = २५

१८२

रात्रिसूक्त-देवीसूक्तमन्त्राः = १६

# अथोपासनासूची ।

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ।
तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥
सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥
महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी ।
निराकारा च साकारा सैव नानाविधानभृत् ॥

इत्यादिभिः श्रुतिसहोदरैर्महावाक्यैः परमेश्वर्या निराकारा साकारा चोपासना स्पष्टमुपदिष्टा । तत्र निराकारोपासनायां विवेकवैराग्यादिसाधनचतुष्टयसंपन्ना एवाधिक्रियन्ते । साकारोपासनायां त्वन्येऽपि । आकाराः प्राधान्येन विष्णुप्रभृतयः पञ्च स्मर्यन्ते । तत्र परमेश्वर्या आकारो विशिष्यत इति चतुरस्रम् । यतो नवार्णमन्त्रप्रतिपाद्याया अस्या ब्रह्मविष्णुमहेश्वरा ऋषित्वेनाम्नायन्ते । ऋषित्वाम्नानं हि न साधारणस्तावकमात्रपर्यवसायीति रहस्यविदां स्पष्टम् । अत एव 'त्वयैतद्धार्यते–' (१।५६) 'विष्णुः शरीरग्रहण–' (१।६५) 'भगवाननन्तो ब्रह्मा हरश्च–' (४।२) 'न ज्ञायसे हरिहरादिभिः–' (४।६) 'सृष्टिस्थितिविनाशानां शक्तिभूते–' (११।१०) 'सैव काले महामारी–' (१२।३६) इत्यादयो मन्त्रवर्णाः ।

प्रवृत्तिनिवृत्तिलक्षणस्य धर्मस्य रक्षकाणामपि रक्षणार्थं तदनुषङ्गेण धर्मद्विषामपि धर्मपुरस्कारेणैव शिक्षणार्थं सैषा परमेश्वरी विलक्षणतरतमां प्रादुर्भावयोगप्रक्रियामास्थाय विलक्षणतरतमैरेव पवित्रैश्चरित्रैः शब्दार्थसृष्टिं पूरयति । तथाहि–'एवं स्तुता तदा देवी–' (१।६८–७०) 'ततः पराजिता देवाः–' (२।३–६) 'पुरा शुम्भनिशुम्भाभ्यां–' (५।१–५) 'धर्मद्विषां देवि महासुराणां–'

( ११।२६ ) 'यज्ञभागभुजः–' ( १२।३१ ) 'जगत्स्वास्थ्यमतीवाप–' ( १०।२४ ) इत्यादिना धर्मरक्षकाणां रक्षणम् । 'त्रैलोक्यमिन्द्रो लभतां देवाः सन्तु हविर्भुजः । यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥' ( ८।२५ ) 'शेषाः पातालमाययुः' ( १२।३२ ) इत्यादिना धर्मद्वेष्टॄणामपि न्यायेनैव शिक्षणम् । युक्तं चैतत् सर्वसत्त्वमय्या उपेन्द्रकार्यकरणानुग्रहप्रावण्यम् । एतेन—

देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ ( १।४८ )
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ( ११।५५ )

इति भगवत्याः प्रादुर्भावतत्प्रतिज्ञे विशिष्टोपकारायेति ।

अपि च । 'निर्गम्य दर्शने तस्थौ ब्रह्मणः–' ( १।७० ) 'ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्–' ( २।६–१८ ) 'शरीरकोशतश्चास्याः समुद्भूताब्रवीच्छिवा' ( ५। ३८ ) इत्येवमादिभिर्मन्त्रवर्णैर्योगैश्वर्या नामतो रूपतश्चात्यन्तं विलक्षणा एव लीलाविग्रहा इति प्रतिचरित्रं प्रसिद्धम् । एतेन–

सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ॥ ( १।६२ )

इत्युक्तं वैकृतिकमूर्तिरहस्यादिनोपबृंहितं लीलाविग्रहनिरूपणं यथारुचिचित्तावतरणानुग्रहकम् ।

अपि च । 'तावप्यतिबलोन्मत्तौ महामायाविमोहितौ' ( १।७३ ) 'मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः' ( ३।३६ ) 'तान् विषण्णान् सुरान् दृष्ट्वा–' ( ८।५२ ) 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' ( १०।३ ) 'अहं विभूत्या बहुभिः–' ( १०।५ ) 'सैषा प्रसन्ना वरदा नृणां भवति मुक्तये' ( १।४३ ) 'सा विद्या परमा मुक्तेः–' ( १।४४ ) 'त्रियतां त्रिदशाः सर्वे–' ( ४।२६ ) 'तथेत्युक्त्वा भद्रकाली बभूवान्त-

र्हिता नृप ' ( ४।३३ ) ' त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ' ( ११।४ ) ' सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी ' ( ११।६ ) ' स्वर्गापवर्गदे देवि–' ( ११।७ ) ' वरदाहं सुरगणा वरं यं मनसेच्छथ ' ( ११।३५ ) ' एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः । तस्याहं सकलां बाधां शमयिष्याम्यसंशयम् ॥ ' ( १२।१ ) ' जानताऽजानता वापि–' ( १२।१० ) ' सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः । मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ ' ( १२।१२ ) ' सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा । स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् ' (१२।२७) ' सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ' ( १२।३४ ) ' स्तुता संपूजिता पुष्पैर्गन्धधूपादिभिस्तथा । ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभाम् ॥ ' ( १२।३८ ) ' आराधिता सैव नृणां भोगस्वर्गापवर्गदा ' ( १३।२ ) इत्येवमादिभिर्मन्त्रवर्णैर्भगवत्याः पवित्राणि चरित्राणि व्यक्तान्येव, तत्रापि—

' स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् ( १३।१२ )
सावर्णिको मनुर्नाम भवान् भुवि भविष्यति ' ( १३।१४ )

इत्यनेन श्रीमुखवाक्येन सुरथः परमाभ्युदयप्राप्तेर्दृष्टान्तस्तथा—

' वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः ।
तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥ ' ( १३।१५ )

इत्यनेन समाधिर्निःश्रेयसलब्धेर्दृष्टान्त इत्यपि व्यक्तम् ।

अत्रेदमपि बोद्धव्यम्—'तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान्' इति धर्मपरायणस्यापि; प्रारब्धमहिम्ना 'आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः । अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः' । इति दुःखसागरमग्नस्य; 'मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा' इति चिन्ताकुलस्य; यदृच्छया मुन्याश्रमे 'पुत्रदारैर्निरस्तश्च धनलोभा-

द् साधुभिः' इति समानधर्माणं वैश्यं प्राप्तस्य; 'किमेतन्नाभिजानामि जानन्नपि महामते। यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु' इति संदिहानेन तेन सहैव भगवन्तं सुमेधसम्। 'एवमेष तथाहं स द्वावप्यत्यन्तदुःखितौ। दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ' इति विवेकाभावं पृष्टवतः; 'तथापि ममतावर्ते मोहगर्ते निपातिताः। महामायाप्रभावेण संसारस्थितिकारिणः॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति॥' इति तत्कारणं ज्ञातवतः; 'निर्विण्णोऽतिममत्वेन राज्यापहरणेन च। जगाम सद्यस्तपसे स च वैश्यो महामुने।' इति पराम्बामाराधयतः; 'निराहारौ यताहारौ तन्मनस्कौ समाहितौ' इति नियमेषु तस्थुष एव; न तु रजस्तमोभ्यां विपरीतचेष्टस्य राज्ञो (वैश्यस्य) वरलाभ इत्युपासना दिक्। अत्र सकामनिष्कामोपासनयोर्लिङ्गभूतौ खल्विमौ मन्त्रौ—

ते संमता जनपदेषु धनानि तेषां
तेषां यशांसि न च सीदति धर्मवर्गः।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना॥

यामुक्तिहेतुरविचिन्त्यमहाव्रता च
अभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः।
मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासि सा भगवती परमा हि देवि॥

अपि च। 'शब्दात्मिका सुविमलर्ग्यजुषां निधानम्—' (४।६) 'विद्यासु शास्त्रेषु—' (११।३०) 'त्वं स्वाहा त्वं स्वधा—' (१।५४-५५) इत्येवमादिभिर्मन्त्रवर्णैः परमेश्वर्याः शब्दसृष्टिरूपत्वम्। तथा—'देवि प्रपन्नार्तिहरे प्रसीद—' (११।२-३) 'विश्वेश्वरि त्वं—' (११।३२) इत्येवमादिभिरर्थसृष्टिरूपत्वम्। तथा 'यच्च किंचित् क्वचिद्

वस्तु—' इत्यादिभिरुभयरूपत्वम्। 'चितिरूपेण या कृत्स्नमेतद् व्याप्यस्थिता जगत्' इत्यादिभिः पुनरनुभयरूपत्वम्। तत्र नामरूपोपसंहारेण—

'भूतानि दुर्गा भुवनानि दुर्गा
स्त्रियो नरश्चापि पशुश्च दुर्गा।
यद् यद्धि दृश्यं खलु सैव दुर्गा
दुर्गास्वरूपादपरं न किंचित्॥'

इति भावयतः परं शिवमिति।

॥ श्रीगणेशाय नमः ॥

# सप्तशतीसर्वस्वं

## भागत्रयभूषितं

प्रारभ्यते ॥

गजाननं विघ्नहरं गणार्चितपदाम्बुजम् ।
सेवितं सिद्धिबुद्धिभ्यामनिशं श्रेयसे श्रये ॥ १ ॥

नित्यामनन्तां प्रकृतिं पुराणीं
चिदीश्वरीं सर्वजगन्निवासाम् ।
निरस्तदेहामगुणां गुणाश्रयां
वर्णार्थरूपां प्रणमामि देवीम् ॥ २ ॥

श्रीमद्दुर्गानन्दनाथाङ्घ्रिपद्मं
नत्वा स्तुत्वा संप्रदायप्रणेतॄन् ।
पूर्वाचार्यप्रोक्तटीका विगाह्य
यद्यत्सारं तत्तदेवाचिनोमि ॥ ३ ॥

सप्तसत्याः प्रसादेन सप्तशत्यर्थसंग्रहम् ।
प्रयोगानपि लब्धांश्च विचिनोमि यथामति ॥ ४ ॥

श्रीसप्तशत्याः सर्वस्वे निखिलार्थप्रदे शिवे ।
सूचीं वक्ष्येऽथ सर्वस्य ज्ञानाय विषयस्य च ॥ ५ ॥
विश्रामे प्रथमे चात्र ब्रह्ममायैक्यनिर्णयः ।
त्रिशक्तीनां समुत्पत्तिर्मायाबीजात्ततः परम् ॥ ६ ॥
नवार्णसप्तशत्यौ द्वौ मन्त्रौ तासां निरूपितौ ।
तयोर्निरूपणं तद्वन्माहात्म्यमपि कीर्तितम् ॥ ७ ॥
नामानि सप्तशक्तीनां प्रत्येकचरितं प्रति ।
संप्रदायपरत्वेन तथा पाठव्यवस्थितिः ॥ ८ ॥
पाठक्रमः सप्तशत्याः सूक्तयोरपि निर्णयः ।
शापोद्धारः कीलकश्च पाठे सप्तशतीमनोः ॥ ९ ॥
विधिस्तथा निषेधश्च पाठे सम्यक् प्रकीर्तितः ।
स्तोत्रन्यासस्तथा ध्याने मुख्यशक्तिविनिश्चयः॥१०॥
नित्यपाठे त्वर्चनस्य प्रकारः समुदीरितः ।
सप्तशत्याः षडङ्गानि निर्णीतानि प्रयत्नतः ॥ ११ ॥
विश्रामेऽथ द्वितीये तु कवचं विवृतिस्फुटम् ।
व्याख्या तथा तृतीये तु सानुष्ठानार्गलास्तुतेः॥ १२ ॥
चतुर्थे कीलकव्याख्या तथा च गुरुकीलकम् ।
पञ्चमे चाथ विश्रामे सव्याख्यं रात्रिसूक्तकम् ॥ १३ ॥
ॐ नमश्चण्डिकायै तु नवार्णस्य महामनोः ।
व्याख्या संकलिता चात्र संप्रदायपुरःसरम् ॥ १४ ॥

एवं प्रथमभागेऽत्र पदार्था अथ मध्यमे ।
भागे त्रयोदशाध्यायव्याख्या मन्त्रभिदान्विता ॥ १५ ॥
भागेऽन्तिमेऽथ प्रथमे विश्रामे व्याकृतिस्फुटम् ।
देवीसूक्तं द्वितीये तु प्राधानिकरहस्यकम् ॥ १६ ॥
सव्याख्यानं वैकृतिकं रहस्यं तु तृतीयके ।
विवृत्यालङ्कृतं मूर्तिरहस्यं, तु तुरीयके ॥ १७ ॥
पञ्चमेखिलमार्कण्डेयोक्त आराधनक्रमः ।
सोद्धारा सप्रकाशा च पद्धतिर्नित्यकर्मणाम् ॥ १८ ॥
नित्यचण्डीविधानं च नवदुर्गाविधिस्तथा ।
नवचण्डीक्रमश्चापि शतचण्डीविधिस्तथा ॥ १९ ॥
सहस्रचण्डिकारीतिः कुमारीपूजनक्रमः ।
तथा होमविधिश्चण्ड्या विश्रामे चाथ षष्ठके ॥ २० ॥
विधिः सार्धनवस्याथ दीपदानं ततः परम् ।
नानाकाम्यप्रयोगास्तु मन्त्रसंपुटयोगतः ॥ २१ ॥

एवं तज्जलनिधिलोचनप्रमाणै-
र्विश्रामैर्विविधविधिक्रमं वहद्भिः ।
संपूर्णं परगुणकप्रसक्तिभाजां
सर्वस्वं भवतु मुदे सुसाधकानाम् ॥ २२ ॥

अथात्र प्रपञ्चे पदार्थद्वयमेव मुख्यं सर्वप्रपञ्चमूलभूतं ब्रह्म माया चेति निर्विवादमितरत्सर्वं तद्विकारभूतमित्यपि निर्विवादमेव। तथा च श्रुतिः श्वेताश्वतराणाम्। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तयोर्विभूतिलेशो वै जगदेतच्चराचरम्' इति स्मृतिश्च। 'शक्तिश्च शक्तिमाँश्चैव पदार्थद्वयमुच्यते। शक्तयोऽस्य जगत्सर्वं शक्तिमाँश्च महेश्वरः' इति। शास्त्रकारा अपि। 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति। तदेतत्पदार्थद्वयं न भिन्नम्। किंतु चन्द्रचन्द्रिकयोरिव तादात्म्यापन्नमेव। तदुक्तम्। 'शक्तिश्च शक्तिमद्रूपाव्यतिरेकं न वाञ्छति। तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव' इति। तत्र यथा ब्रह्मणो मुख्यो मन्त्रः प्रणवः, तथा मायाया मन्त्रो मुख्यं मायाबीजमिति। तच्च तैत्तिरीयश्रुतौ कण्ठरवेणोपात्तम्। 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति। बृहदारण्यकेऽपि। 'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयः' इति। सामवेदेऽपि तदेव मायाबीजं रकाररूपकीलकरहितं ह्रस्वेकारघटितं कण्ठरवेणोपात्तम्। 'पृथ्वी हिङ्कार आदित्यो हिङ्कारो द्यौर्हिङ्कारः पुरोवातो हिङ्कारः प्रजापतिर्हिङ्कार उद्यन्हिङ्कारो मनो हिङ्कारः' इति। एतदेव भुवनेश्वरीसंहितायाम्। 'सामसु प्रथमा भक्तिर्हिङ्कारो मे मनुर्मतः। ह्रस्वेकारयुतं तत्तु मायाबीजं प्रचक्षते' इति। देव्यथर्वशीर्षेऽपि। 'वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम्। अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्। एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः। ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः' इति। अत एव यानि यानि ब्रह्मणो नामानि ध्रुवस्तार इत्यादीनि तानि तान्येव तद्वाचकस्य प्रणवस्य। तथा मायाबीजस्य यानि यानि नामानि शक्तिर्मायेत्यादीनि तानि तान्येव तद्वाचकमायाबीजमन्त्रस्य नामानि।

तच्च यथा । 'मायाबीजस्य नामानि मालिनी शिववल्लरी । माया मूर्तिः कला वाणी बीजशक्तिश्च कुण्डली' इति । तत्र ब्रह्ममाययोरभिन्नत्वाद्ब्रह्मवाचकोऽपि प्रणव उभयवाचकः । एवं मायावाचकमपि मायाबीजं ब्रह्ममायोभयवाचकम् । यच्च ब्रह्माण्डपुराणे । 'ह्रींकार उभयात्मकः' इति । प्रपञ्चसारे आचार्या अपि । 'तद्वा तां तारमित्याहुरोमात्मेति बहुश्रुताः । तामेव शक्तिं ब्रुवते हरीमात्मेति चापरे' इति । इत्थं सर्वोत्तमयोः प्रणवमायाबीजमन्त्रयोर्वाच्यं शबलब्रह्मरूपं बिन्दुपदेन तान्त्रिकैर्व्यवह्रियते । तदुक्तं शारदायाम् । 'आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः' इति । आचार्या अपि भुवनेश्वरीस्तुतौ । 'नमस्ते समस्तेशि बिन्दुस्वरूपे' इति । तत्र प्रणवस्य शिवो देवताधिष्ठात्रीति प्रणवोत्पत्तिप्रकरणे । रुद्रो देवतेति गोपथब्राह्मणे । मायाबीजस्य भुवनेश्वरी देवता । अत एवैतद्बीजस्य भुवनेश्वरीबीजमिति सकलशास्त्रसिद्धान्तः । तत्रैवं सति यथा बीजादङ्कुरकाण्डपुष्पफलात्मको वृक्षो भवति तद्वन्मायाबीजवाच्याद्बिन्दोरिच्छाज्ञानक्रियारूपिण्यो रौद्रीज्येष्ठावामात्मिकाः शक्तयो भवन्ति । ता एव महाकालीमहालक्ष्मीमहासरस्वत्यो देवताः । तासां च मन्त्रेषु मन्त्रद्वयमेव मुख्यम् । नवार्णः सप्तशती चेति । तत्र मन्त्रद्वये प्रधानोपसर्जनभेदेन प्रकारद्वयमपि । तत्र नवार्णस्य प्राधान्ये सप्तशत्यास्तदङ्गत्वमित्येकः प्रकारः । सच मेरुतन्त्रादिबहुपु तन्त्रेषु दृष्टः । तत्राद्ये यः साधकः प्राधान्येन नवार्णदीक्षां गृह्णाति तेन नवार्णोक्तयन्त्रे नवार्णदेवताः संपूज्य नवार्णजपं कृत्वा तदङ्गत्वेन सप्तशत्याः पाठः कर्तव्य इति प्रथमः प्रकारः । यस्तु सप्तशतीमालामन्त्रे दीक्षितो भवति तेन रहस्योक्तप्रकारेण तदुक्तयन्त्रे सप्तशती देवताः संपूज्य तदङ्गत्वेन पूर्वोत्तरभागयोर्नवार्णमन्त्रं जपित्वा सप्तशतीपाठः कर्तव्य इति द्वितीयः प्रकारः । उभावपि प्रकारौ कीलका-

ध्याये स्पष्टो। तदुक्तम्। सर्वमेतद्विजानीयान्मन्त्राणामभिकीलकम्। सोऽपि क्षेममवाप्नोति सततं जाप्यतत्पर इत्यादि। एतेन स्तुवतां देवी स्तोत्रमात्रेण सिद्ध्यति इति तट्टीकायां चैतत्स्पष्टीभविष्यति। अथेदं सप्तशतीस्तोत्रं मार्कण्डेय उवाचेत्यारभ्य सावर्णिर्भविता मनुरित्यन्तं त्रयोदशाध्यायात्मकं मार्कण्डेयपुराणान्तर्गतं सर्वकामदुघं न केनचिन्निर्मितमिति। किंतु वेदवदनाद्येव। तदुक्तं भुवनेश्वरीसंहितायाम्। 'यथा वेदो ह्यनादिर्हि तद्वत्सप्तशती स्मृता' इति। मेरुतन्त्रेऽपि। 'सप्तशत्याश्च सकलं तत्त्वं वेद्म्यहमेव हि। पादोनं श्रीहरिर्वेत्ति त्वर्धं तु प्रजापतिः। व्यासस्तुर्यांशकं वेत्ति कोट्यंशमितरे जनाः' इति। व्यासेन प्रकटीकृतत्वात्तु लोके व्यासकृतमिति व्यवहारः। रुद्रयामलेऽपि। 'अस्ति गुह्यतमं देव्या माहात्म्यं सर्वसिद्धिदम्। वाक्यैरर्थैश्च पद्यैश्च सप्तशत्यात्मकं शुभम्। सविशेषपरं साक्षाच्चिच्छक्तिमहिमाश्रयम्। तात्पर्यगत्या तत्कृत्स्नं निर्विशेषचिदाश्रयम्' इति। चिदम्बरसंहितायामपि। 'का च सप्तशती नाम देवी दारिद्र्यनाशिनी। तस्याः स्वरूपं मे ब्रूहि तत्त्वतः परमेश्वर'। शिवः। 'शृणु देवि प्रवक्ष्यामि सप्तशत्या महोदयम्। यस्याश्च पठनान्मन्त्री त्यजेज्जन्मदरिद्रताम्। या चिन्मयी परा देवी त्रिपुरा त्रिविधाभवत्। देवकार्यसुसिद्ध्यर्थमसुराणां वधाय च। महत्यापदि संप्राप्ते देवाः संतुष्टुवुर्भृशम्। तदा सा चिन्मयी शक्तिः कालीरूपा बभूव ह। सैव कालान्तरे लक्ष्मीस्तथैव च सरस्वती। तासां कथानकं भद्रे त्रिदशाध्यायरूपकम्। मार्कण्डेयपुराणोक्तं स्तवं सप्तशताभिधम्। स्तवस्य तस्य पठनात्सर्वसौख्यं लभेद्ध्रुवम्। तस्मिन्देव्याः स्तवे पुण्ये मन्त्राः सप्तशतं शिवे। तस्मात्सप्तशती नाम स्तवं परमदुर्लभम्। स्तवस्य पठनादेव सर्वे नश्यन्त्युपद्रवाः' इति। डामरतन्त्रेऽपि। 'यथाश्वमेधः क्रतुषु देवानां च यथा हरिः। स्तवानामपि

सर्वेषां तथा सप्तशतीस्तवः । नातः परतरं स्तोत्रं किञ्चिदस्ति वरानने । भुक्तिमुक्तिप्रदं पुण्यं पावनानां च पावनम्' इति । अथास्य सप्तशतीस्तोत्रस्य सप्तशती सप्तसती चेति नामद्वयम् । तद्व्युत्पत्तिर्मेरुतन्त्रे । 'सप्तशत्याश्चरित्रे तु प्रथमे पद्मजो मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता । वाग्बीजं पावकस्तत्त्वं धर्मार्थे विनियोजनम् । प्रयोगाणां तु नवतिर्मारणे मोहनेऽत्र तु । उच्चाटे स्तम्भने चापि प्रयोगाणां शतद्वयम् । मध्यमेऽथ चरित्रे स्यात्तृतीयेऽथ चरित्रके । विद्वेषवश्ययोश्चात्र प्रयोगारिकृते मताः । एवं सप्तशतं चात्र प्रयोगाः संप्रकीर्तिताः । तस्मात्सप्तशतीत्येवं प्रोक्तं व्यासेन धीमता । महाविद्येत्यादिसत्यः सप्तकल्पे तथादिमे । ब्रह्मेन्द्रगुरुशुक्राणां विष्णुरुद्रसुरद्विषाम् । उपास्या देवता जातास्ताश्चात्र ब्रह्मणा स्तुताः । तस्मात्सप्तसतीत्येव व्यासेन परिकीर्तिता ।' ताश्च सत्य आद्ये चरित्रे । काली तारा छिन्नमस्ता सुमुखी भुवनेश्वरी । बाला कुब्जेति सप्तसत्यः । मध्यमचरित्रे तु । लक्ष्मीः ललिता काली दुर्गा गायत्री अरुन्धती सरस्वती चेति सप्तसत्यः । तथोत्तरचरित्रे । ब्राह्मयाद्याश्चामुण्डान्ताः सप्तसत्यः । अथैतासामेकविंशतिसतीनां समष्टिरूपा नन्दाशताक्षीशाकम्भरीभीमारक्तदन्तिकादुर्गाभ्रामर्यः सत्यः सप्तसङ्ख्याता उक्ताः । तस्मात्सप्तसती नामेत्यादि मेरुतन्त्रे स्पष्टम् । अथास्याः सप्तशत्याः सप्तसत्याश्च पाठक्रमोऽनेकतन्त्रानुरोधादनेकविध एव, तेषु च स्वदेशिकमतानुसरणमेव श्रेयस्करमिति । यतस्ते च गौडकेरलकाश्मीराः सामयिका अतस्तेषामनुरोधोऽत्र फलाभिव्यञ्जकः । एतन्मूलकमेव नानात्वम् । मरीचिकल्पानुयायिनां पाठक्रमो यथा । 'रात्रिसूक्तं पठेदादौ मध्ये सप्तशतीस्तवम् । प्रान्ते तु पठनीयं वै देवीसूक्तमिति क्रमः' इति । वेदागमेऽपि । निर्विशेषपरा मन्त्राः सविशेषपराश्च ये । प्रत्यध्यायं निगूढास्ते तेनेयं सर्वतः

परा' इति। तस्य च पाठक्रम एवम्। 'कवचं बीजमादिष्टमर्गला शक्तिरुच्यते। कीलकं कीलकं प्राहुः सप्तशत्या महामनोः' इति वचनाद्यथा सर्वमन्त्रेषु बीजशक्तिकीलकानां प्रथममुच्चारणं तथा सप्तशतीपाठेऽपि कवचकीलार्गलानां प्रथमं पाठः। चिदम्बरसंहितायां पाठक्रमस्तु। अर्गलं कीलकं चादौ पठित्वा कवचं पठेत्। जपेत्सप्तशतीं पश्चात्सिद्धिकामेन मन्त्रिणा। रहस्यत्रयमप्यन्ते पठितव्यं प्रयत्नतः। मध्ये नवार्णपुटितं कृत्वा स्तोत्रं सदाभ्यसेत्। अत्र संपुटक्रमस्तु डामरतन्त्रे। 'शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम्। चण्डीं सप्तशतीं मध्ये संपुटोऽयमुदाहृतः' इति। अत्र सर्वेषु क्रमेषु नित्यकृत्यानन्तरमासनशोधनाऽऽचमनशिखाबन्धनप्राणायामसंकल्पमातृकान्यासादिन्यासांश्च विधाय श्रीदेवीं ध्यात्वा रहस्योक्तक्रमेण श्रीदेवीं वक्ष्यमाणे नवकोष्ठात्मके यन्त्रे संपूज्य कवचार्गलकीलकरात्रिसूक्तानि पठित्वा विनियोगऋष्यादिन्यासपूर्वकं नवार्णमादावष्टोत्तरशतं जपित्वान्ते पाठक्रमेण सप्तशतीमावर्त्यान्ते पुनर्नवार्णमन्त्रस्याष्टोत्तरशतं जपं विधाय ऋष्यादिपूर्वकं श्रीदेव्यै समर्प्य देवीसूक्तं पठित्वा रहस्यत्रयमावर्त्यान्ते प्रार्थनामन्त्रैर्देवीं क्षमाप्य प्रणम्य च विहरेदिति क्रमः। अत्र नवार्णमन्त्रजपोत्तरं रात्रिसूक्तपाठमाह कश्चित्तदसत्। पुटितं मूलमन्त्रेणेति वचनात्पुटितमध्येऽन्यमन्त्रप्रवेशस्य विरोधात्। शतमादावित्यारभ्य संपुटोऽयमुदाहृत इति डामरवाक्यविरोधाच्चेति। अथ रात्रिसूक्तदेवीसूक्तयोर्व्यवस्था। तत्र रात्रिसूक्तदेवीसूक्ते द्विविधे। वेदोक्ते तन्त्रोक्ते च। ते च वैदिकानां प्रथमे एव मुख्ये। अन्येषां तान्त्रिकाणां तु यथेच्छं विकल्पः। तत्र वैदिकं रात्रिसूक्तं रात्री व्यख्यदायतीत्याद्यष्टर्चमृग्वेदे प्रसिद्धम्। तथा देवीसूक्तमपि अहंरुद्रेभिरित्याद्यष्टर्चमृग्वेदे प्रसिद्धम्। यद्वा रात्रिसूक्तं सामवेदे प्रसिद्धं रात्रिं प्रपद्ये इत्याद्येकऋक्सूपम्। तान्त्रिकं तु रात्रि-

सूक्तं सप्तशत्यां प्रथमाध्याये विश्वेश्वरीं जगद्धात्रीमित्यादिपठित-रूपम् । देवीसूक्तं तु नमो देव्यै महादेव्यै इति पञ्चमाध्यायपठितरूपम् । यद्वा । उड्डामरतन्त्रोक्तसहस्राक्षरमन्त्ररूपं देवीसूक्तम् । एवं विवेके होम-प्रकरणे मरीचिकल्पे । 'कृष्णाष्टमीं समारभ्य यावत्कृष्णा चतुर्दशी । वृद्ध्यैकोत्तरया जाप्यं पूर्वसंपुटितं तु तत् । एवं देवि मया प्रोक्तः पौरश्चरणिकक्रमः । तदन्ते हवनं कुर्यात्प्रतिश्लोकेन पावके । रात्रि-सूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम् । हुत्वान्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने' इति । प्रतिश्लोकेनेति सप्तशतमन्त्रविभागोपलक्षणेन । रात्रिसूक्तेन देव्याः सूक्तेन च प्रतिऋचं हवनं कुर्यादिति । अत्र ऋगुपलक्षणेन वैदिके एव रात्रिसूक्तदेवीसूक्ते लभ्येते । ते च ऋग्वेदे शाकलसंहितायां च प्रसिद्धे । ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धिरिति । अथ च सप्तशतीपाठारम्भे शापोद्धारादिकमपि लभ्यते । तत्प्रकारो यथा । तन्त्रे । 'अन्त्या १३ द्या १ र्क १२ द्वि २ रुद्र ११ त्रि ३ दि १० गव्य ४ ङ्के ९ ष्वि ५ भ ८ र्तवः ६ । अश्वो ७ ऽश्व ७ इति सर्गाणां शापोद्धारो मनोः क्रमः' इति । अस्यार्थः । त्रयोदशप्रथमौ । द्वादशद्वितीयौ । एकादशतृतीयौ । दशमचतुर्थौ । नवमपञ्चमौ । अष्टमषष्ठाध्यायौ पठित्वा सप्तमाध्यायं द्विः पठेदिति शापोद्धारः । उत्कीलनं यथा । 'उत्कीलने चरि-त्राणां मध्याद्यन्तमिति क्रमः ।' अस्यार्थः । आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रं ततस्तृतीयचरित्रमित्युत्कीलनम् । यत्तु ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यतीति विहितं दान-प्रतिग्रहनामकं महोत्कीलनं तत्तु कीलकाध्याये स्पष्टीभविष्यति । वस्तुतस्तु । 'एकेन वा मध्यमेन नैकेनेतरयोरिह' इति रहस्याध्या-यवचनेन यस्यैकपाठावसरो नास्ति तस्य मध्यमचरित्रपाठाभ्यनु-ज्ञानात्तादृशस्य पुरुषस्य पूर्वोक्तशापोद्धारकीलकानुष्ठानस्यासंभवा-

चण्ड्यनुज्ञानं व्यर्थमेव स्यात् । अन्यच्च । नियमेनैकपाठयतामेक-स्मिन्दिने संपूर्णपाठाशक्तौ 'पा १ ठो २ यं १ व ४ र २ का १ रः २, इति कलाक्षरसूत्रक्रमेण सप्तभिर्दिनैरेकावृत्तिः । एतस्मादपि शापोद्धारादिकं नावश्यकामिति प्रतिभाति ॥ अथ पाठक्रमो यथा । वाराहीतन्त्रे चिदम्बरसंहितायामपि । 'ध्यात्वा देवीं पञ्चपूजां कृत्वा योन्या प्रणम्य च । आधारं स्थाप्य मूलेन स्थापयेत्तत्र पुस्तकम् । अनुक्रमात्पठेद्देवि शिरःकम्पादिकं त्यजेत् ।' शिरःकम्पादिकं तु । 'रागी शीघ्री शिरःकम्पी स्वतो लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठी च षडेते पाठकाधमाः ।' अन्यच्च । यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अज्ञानात्स्थापिते हस्ते पाठे ह्यर्धफलं ध्रुवम् । न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते । उच्चैःपाठं निषिद्धं स्यात्त्वरां च परिवर्जयेत् । शुद्धेनाचलचित्तेन पठितव्यं प्रयत्नतः । कण्ठस्थपाठाभावे तु पुस्तकोपरि वाचयेत् । न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत् । एवं स्तोत्रेषु सर्वत्र क्रमो ज्ञेयो विचक्षणैः । पुस्तके वाचनं शस्तं सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना ।' अत्र सहस्रन्यूनमन्त्रस्य पाठसत्वे पुस्तकं विनैव वाचनं तदभावे आधारे पुस्तकेनैव वाचनम् । सहस्राधिकस्य तु पाठसत्वे चाधारस्थापितपुस्तकोपर्येव वाचनमिति तद्वचनार्थः । प्रकृतस्तोत्रस्य सहस्रन्यूनत्वात् 'कृताञ्जलिपुटो भूत्वा स्तुवीत चरितैरिमैः' इति वैकृतिकरहस्ये विधानाच्च[सहस्रपाठाभावे पुस्तकस्याधारस्थापनेनैव वाचनम्] कण्ठपाठीकृत्य पुस्तकं विनैव कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्दो द्वात्रिंशत्स्वरात्मकस्यैकैकानुष्टुप्त्वकल्पनेन तादृशानुष्टुप्छन्दःसहस्रं ज्ञेयमिति शक्तिसंगमतन्त्रे स्पष्टम् । यच्च ।

'द्वात्रिंशता स्वरैर्युक्त एको ग्रन्थो निगद्यते। स एव गदितः श्लोकस्ता-रानेत्रसमुद्भवः' इत्यादि। तेन गद्यात्मकमालामन्त्रेष्वप्यस्य प्रसरो ज्ञेयः। स्तोत्रस्य पूर्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसंगम एव द्रष्टव्यानि। 'ऋषिश्छन्दो दैवतानि पठेत्स्तोत्रे समाहितः। यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्' इति॥ स्तोत्रन्यासश्च डामरे। 'सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः। छन्दो गायत्रमुदितं महाकाली तु देवता। वाग्बीजं पावकस्तत्त्वं धर्मार्थे विनियोजनम्। मध्यमस्य चरित्रस्य विष्णुर्मुनिरुदाहृतः। उष्णिक् छन्दो महालक्ष्मीर्देवता बीजमद्रिजा। वायुस्तत्त्वं धनप्राप्त्यै विनियोग उदाहृतः। उत्तमस्य चरित्रस्य मुनिः शंकर ईरितः। त्रिष्टुप्छन्दो देवतास्य महापूर्वा सरस्वती। कामो बीजं रविस्तत्त्वं कामार्थे विनियोजनम्। मायान्ते चण्डिकायै च व्यस्तवर्णैः समस्तकैः। कृत्वा षडङ्गमृष्यादि स्मृत्वा ध्यात्वोक्तमार्गतः। रहस्योक्तप्रकारेण पूज्य लक्ष्मीं विधानतः। सार्थस्मृतिं पठेच्चण्डीस्तवं स्पष्टपदाक्षरम्। समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम्। जपेदष्टशतं मूलं देवतायै निवेदयेत्। एवं यः कुरुते स्तोत्रं नावसीदति जातुचित्' इति। अत्र ध्यात्वोक्तमार्गत इत्युक्तं तत्र ध्यानप्रकारश्चेत्थं सप्तशतीरहस्ये। सर्वस्याद्या महालक्ष्मीरित्यत्र तुरीयस्वरूपाभिमानिनी या देवी तस्यास्तप्तकाञ्चनवर्णेत्यादिरहस्योक्तप्रकारेण ध्यानम्। इदं च रूपं साम्यावस्थाभिमानिप्रणवमायाबीजवाच्यं पूर्वमुक्तं तदस्ति। पश्चात्तमोगुणोद्रेकात्तदभिमानिमहाकालीरूपं जातमस्ति। तस्य ध्यानं सा भिन्नाञ्जनसंकाशेति। अस्याश्च काल्या बहिस्तमोगुणत्त्वेऽप्यन्तः सत्त्वरजोगुणावपि विद्येते। एवं सर्वस्य गुणत्रयात्मकतास्ति। पश्चात्सत्त्वगुणोद्रेकेण तदभिमानिमहासरस्वतीरूपमभवत्तस्य ध्यानमक्षमालाङ्कुशधरेति। इदमप्यन्तस्तमोरजो-

गुणवत् । रजोगुणोद्रेकस्य त्वभिमानि स्वयं महालक्ष्मीरूपमेवाभवत्तस्य महालक्ष्मीध्यानमेव ध्यानम् । पश्चान्मधुकैटभवधार्थं यन्महाकाल्याः सकाशात्कालीरूपमभवत्तस्य ध्यानं दशवक्त्रा दशभुजेति । तथा महिषवधार्थं यन्महालक्ष्म्याः सकाशाद्रूपमभवत्तस्य ध्यानं श्वेतानना नीलभुजेति । तथा शुम्भवधार्थं महासरस्वतीरूपमभवत्तस्य ध्यानं दधौ चाष्टभुजा बाणं मुसलेत्यादि । तथा च मूलप्रकृतिध्यानसहितानि सप्त ध्यानान्यभवन्, तानि यथास्थानं ध्यात्वा नवकोष्ठे यन्त्रे तासामेव सप्तशक्तीनां पूजासंकल्पादिकं तत्तन्नाम्ना कार्यम्, सर्वं चेदं रहस्यद्वये स्पष्टम् । अयं संप्रदाय इदानीमुच्छिन्नोऽपि श्रीरहस्योक्तत्वात्सर्वैर्बुद्धिमद्भिरालोच्यादरणीय इति । अथासां रहस्योक्तनित्यपूजाप्रकारो लिख्यते । यथा । महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती । दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् । विरिञ्चिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे । वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम् । अष्टादशभुजा मध्ये वामे चास्या दशानना । दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेदिति । अत्रायं प्रकारः । स्वर्णरजतताम्रभूर्जाद्यन्यतमपीठे स्थण्डिले वा नवकोष्ठं यन्त्रं विधाय तत्र प्रथमपङ्क्तावीशानकोणमारभ्याग्निकोणपर्यन्तं रुद्रगौर्यौ विरिञ्चिसरस्वत्यौ विष्णुलक्ष्म्यौ पूजयेत् । मध्यपङ्क्तौ क्रमेण उत्तरकोष्ठाद्दिक्षिणान्तं महाकालीमहालक्ष्मीमहासरस्वतीत्रयम् । तृतीयपङ्क्तौ वायुकोणान्निर्ऋतिकोणपर्यन्तं दशाननाष्टादशभुजाष्टभुजाः पूजयेत् । तत्र वाग्भवबीजान्ते महाकाल्यै नम इति मन्त्रेण महाकालीद्वयस्य पूजनम् । मायाबीजान्ते महालक्ष्म्यै नम इति मन्त्रेण महालक्ष्मीद्वयस्य पूजनम् । मायाबीजेनैव तुरीयमहालक्ष्म्याः पूजनम् । कामबीजान्ते महासरस्वत्यै नम इति मन्त्रेण सरस्वतीद्वयस्य यथासंभवोपचारैः पूजनमिति वि-

वेकः । अस्यां च पूजायां महालक्ष्म्यास्तृतीयपङ्क्तिमध्यकोष्ठस्थाया दक्षिणभागे सिंहं वामे महिषं च पूजयेत् । इत्थं पूजां समाप्य मूलभूतां तुरीयां महालक्ष्मीं विश्वेश्वरीं जगद्धात्रीमित्यादिभिश्चरित्रत्रयोक्तैः स्तोत्रैस्त्रिभिः स्तुवीत । तदनन्तरं पूर्वोक्तक्रमेण कवचादिपूर्वकं मालामन्त्रं जपेदिति नित्यः पौरश्चरणिको वा पाठक्रमः । काम्ये तु तत्तत्कामनाभेदेन यदा तत्तच्चरित्रान्तर्गतैकैकस्य मन्त्रस्योपासनं क्रियते । यथा ज्ञानिनामपि चेतांसि, दुर्गे स्मृता, सर्वाबाधाप्रशमनमित्यादि । तत्र प्रथमं पूर्वोक्तां पूजां समाप्य पुनस्तत्तन्मन्त्रघटिततत्तच्चरित्रस्य तां तां देवतां संपूज्य तस्यास्तस्या निकटे कालमृत्यू च संपूज्य तत्तच्चरित्रगतस्तोत्रेण स्तुवीत । यथा । विश्वेश्वरीं जगद्धात्रीमिति । शक्रादयः सुरगणा इति । नमो देव्यै महादेव्यै इत्यादिकेन तां तां देवतां स्तुत्वा तत्तन्मन्त्रं जपेदिति काम्ये विशेषः । यच्च सप्तशतीरहस्ये । नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत् । अवतारत्रयार्चायां स्तोत्रमन्त्रास्तदाश्रया इति । अष्टादशभुजा चैषा यदा पूज्या नराधिप । दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा । कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशान्तये इति । अस्मिन्विषये एकैकस्य मन्त्रस्य ऋष्यादिकं तु यदि नोपलभ्यते तदा स मन्त्रो यच्चरित्रस्थस्तच्चरित्र ऋष्यादिकमेव ग्राह्यमिति । अथ पूजानन्तरं कवचार्गलकीलकानां पाठस्यावश्यकत्वम् । यच्च कात्यायनीतन्त्रे । अङ्गहीनो यथा देही सर्वकर्मसु न क्षमः । अङ्गषट्कविहीना तु तथा सप्तशतीस्तुतिः । तस्मादेतत्पठित्वैव जपेत्सप्तशतीं पराम् । अन्यथा शापमाप्नोति हानिं चैव पदे पदे । रावणाद्याः स्तोत्रमेतदङ्गहीनं निषेविरे । हता रामेण ते यस्मान्नाङ्गहीनं पठेत्ततः । अङ्गषट्कं कवचार्गलकीलं रहस्यत्रयसहितमिति ॥

इति उपासनाक्रमो नाम प्रथमो विश्रामः ॥ १ ॥

अथाङ्गषट्कारम्भः । तत्रादौ कवचं सविवरणं संगृह्यते ।

तत्र कवचांशे ब्रह्माणं प्रति मार्कण्डेयप्रश्नः ।

मार्कण्डेय उवाच-

यद् गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥१॥

यदिति । लोके यत्परममुत्कृष्टं गुह्यं रहस्यमस्ति तन्मे ब्रूहि । तत्किं ब्रह्मरूपम् । नेत्याह-सर्वरक्षाकरं येन सर्वेषामपि रक्षा भवति । पामरप्रभृतीनामपि तादृशमित्यर्थः । ननु लोके अन्यान्यपि कवचानि सन्ति किमिति प्रश्नेनेति । सत्यम् । सन्ति, तथापि यद्भवता कस्यचित् कस्यापि नाख्यातं निधिबुद्ध्या स्थापितमस्ति । तदित्यर्थः । तेन च निःसंशयमेव रक्षणं स्यादिति भावः । अन्यथा निधिबुद्ध्या तस्य रक्षणं निरर्थकं स्यादिति । ननु किमत्युत्कृष्टं वस्तु मया देयमिति चेत्तत्राह-हे पितामह ! स्वसंततिरक्षणार्थं पितामहेनावश्यं देयमित्यर्थः ॥ १ ॥

ब्रह्मोवाच-

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥

अस्तीति । हे विप्र यत्त्वया पृष्टं तादृशं गुह्यतमं अतिगोप्यं पुण्यं सर्वभूतानामुपकारकं रक्षणाद्यभीष्टदं देव्याः कवचमस्ति तन्महामुने शृणुष्व महामुने चेति संबोधनं लोकोपकारार्थं प्रवृत्तत्वादिति ॥ २ ॥

तत्र सा कवचाधिष्ठात्री नवमूर्त्यात्मिका ध्येयेत्यभिप्रायेण

तासां मूर्तीनां नामान्याह-

प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥

प्रथमामिति । नामज्ञाने जाते तद्वाच्याकारस्य प्रसिद्धत्वादेव ज्ञानं भविष्यतीति भावः । सर्वोत्तरेश्वर्यपि भगवती शैलेन भक्तेन हिमाचलेनातितपश्चर्यया प्रार्थिता सती कारुण्यवशादतिनीचमपि पुत्रीत्वं स्वीकृतवतीत्यहो भक्तवात्सल्यं कियद्वर्णनीयं भगवत्या इति कूर्मपुराणे प्रसिद्धम् । ब्रह्मचारिणीति । ब्रह्म सच्चिदानन्दरूपं, तच्चारयितुं प्रापयितुं शीलमस्याः सा ब्रह्मचारिणी ब्रह्मरूपप्रदेत्यर्थः । चन्द्रघण्टेति । चन्द्रो हस्तगतायां घण्टायां यस्याः । चन्द्रवन्निर्मलघण्टेति वा । 'आह्लादकारिणी देवी चन्द्रघण्टेति कीर्त्यते' इति रहस्यागमोक्तेः । चन्द्रं घण्टयति प्रतिवादितया भाषते स्वस्याह्लादकारित्वाभिमानेनेति चन्द्रघण्टा, चन्द्रापेक्षयाप्यतिशयेन लावण्यवतीत्यर्थः । पटपुटेति दण्डकपठितस्य चुरादेर्घटिधातोर्भाषार्थस्य पचाद्यचि रूपम् । चन्द्रस्य घण्टा चन्द्रघण्टेति वा । कूष्माण्डेति । कुत्सित ऊष्मा संतापस्तापत्रयरूपो यस्मिन्संसारे स संसारोऽण्डे मांसपेश्यामुदररूपायां यस्याः सा त्रिविधतापयुक्तसंसारभक्षणकर्त्रीत्यर्थः । अण्डः पेशी च मुष्कं चेति मेदिनी ॥ ३ ॥

**पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।**
**सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४ ॥**

पञ्चममिति । सनत्कुमारस्य भगवतीवीर्यादुद्भूतस्य स्कन्द इति संज्ञा । भगवान्सनत्कुमारस्तं स्कन्द इत्याचक्षत इति छान्दोग्यश्रुतेः तथाच । ज्ञानिभिरपि यदुदरे जन्माभिलषणीयमित्यतिशुद्धेत्यर्थः । कात्यायनीति । देवकार्यार्थं कात्यायनाश्रमे आविर्भूता तेन कन्यात्वेन स्वीकृतेति कात्यायनी नाम भगवत्याः । अस्या निरन्तरं कुमारीत्वेन पत्यनधीनतया स्वातन्त्र्यम् । कालरात्रीति । सर्वमारकस्य कालस्य रात्री नाशिकेत्यर्थः । प्रलये कालस्यापि नाशात् । कृदिकारादक्तिन इति ङीष् । महागौरीति । इयं च महामानिनी

नर्मोक्त्या शिवेन कालीत्युक्ते तपसा गौरवर्णस्य संपादनत्वादे-
तत्कालीपुराणे स्पष्टम् ॥ ४ ॥

**नवमं सिद्धिदा प्रोक्ता नव दुर्गाः प्रकीर्त्तिताः ।**
**उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥**

नवममिति । सिद्धिदा मोक्षदेत्यर्थः । इतीति शेषः । सिद्धिदेति नवममित्यन्वयः । नव दुर्गा इति योगिनः । कायव्यूहवदेकस्या एव दुर्गाया एते एव नव भेदा ये शास्त्रे ध्येयत्वेन प्रोक्तास्ते मया कीर्त्तिता इत्यर्थः । अत एव देव्याः कवचमित्येकवचनं संगच्छते । नाम्नां स्वकल्पितत्वशङ्काव्युदासार्थमाह—उक्तान्येतानीति । महात्मना सर्वज्ञेन ब्रह्मणैव वेदेनैव एतान्युक्तानीत्यर्थः ॥ ५ ॥

इत्थं कवचपाठे ध्येयं देवतास्वरूपं प्रदर्श्य तत्फलेऽवि-
श्वासो नैव कर्त्तव्य इति कैमुतिकन्यायेनाह—

**अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ।**
**विषमे दुर्गमे चैव भयार्त्ताः शरणं गताः ॥ ६ ॥**

अग्निनेति । योऽग्निना दह्यमानो रणे शत्रुमध्ये च गतः सन् शरणं गत इति शेषः । अथ ये विषमे दुर्गमे चातिसंकटे भयार्त्ताः भयपीडिताः सन्तः शरणं गताः ॥ ६ ॥

तेषां तस्य च भक्तिरहितेन स्मरणमात्रेणापि तज्जन्यं
भयादिकं न भवतीत्याह—

**न तेषां जायते किञ्चिदशुभं रणसंकटे ।**
**नापदं तस्य पश्यन्ति सर्वदुःखक्षयङ्करी ॥ ७ ॥**

न तेषामिति । एतेषां नाम्नां मध्ये यस्य कस्यापि नाम्नो ये शरणं गताः तदाश्रयं प्राप्ताः तेषामशुभममङ्गलं न जायते । मङ्गलमेव भवतीत्यर्थः । ननु कुत्राशुभं न जायते तत्राह—रणे संग्रामे यत्संकटं

तस्मिन् । नापदमिति । येनापन्नेनापन्नाशाय एताः पूर्वोक्ताः शैल-पुत्र्यादयः स्मृताः तस्यापदं ता न पश्यन्ति । किंत्वापदं दूरीकुर्वन्ती-त्यर्थः । पुनः सर्वदुःखक्षयंकरी तासामेकापि स्मृतेति भावः ॥ ७ ॥

**यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते ।**

यैस्त्विति । यैस्तु भक्त्या स्मृता भवति तेषां पूर्वोक्तं फलम्, ऋद्धिः धर्मार्थकाममोक्षाणां च भवतीत्यर्थः ॥

भक्त्युत्पादनार्थमिदानीं देव्या अतिवात्सल्यं दर्शयति ।

**प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥८॥**
**ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ।**
**माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥९॥**
**ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।**

प्रेतसंस्थेत्यादिसप्तमातॄणां वर्णनं श्लोकद्वयेन स्पष्टमिति ॥ ८।९ ॥

**नानाभरणशोभाढ्या नानारत्नोपशोभिताः॥१०॥**
**दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ।**

नानेति । वक्ष्यमाणा देव्यो दृश्यन्त इति । सप्तमातृभिन्ना याश्च देव्यस्ता अपि भक्तरक्षणार्थं क्रोधसमाकुला रथमारूढा दृश्यन्ते देवादिभिरिति शेषः ॥ १० ॥

तासामायुधान्याह—

**शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥ ११ ॥**
**खेटकं तोमरं चैव परशुं पाशमेव च ।**
**कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमनुत्तमम् ॥ १२ ॥**

शङ्खमिति । शं सुखं खनति अवदारयति शत्रूणामिति । खनु

अलङ्कारणे, डः। क्रियते गतिरनेनेति चक्रम्। घञर्थे कः, के कृञा-दीनाम् इति द्वित्वम्। उक्तं च। अत्यग्निमतिसूर्यं च चक्रत्येव दिवा-निशम्। प्रतिघातयते शत्रूँश्चक्रं तेन प्रकीर्तितमिति। गदति रुजति शत्रूनिति गदा। शक्यतेऽनयेति शक्तिः। हलति विदारयति शत्रूनिति हलम्। हल विलेखने। मुस्यति शत्रूनिति मुसलम्। मुस खण्डने कलच्। तदेतदायुधमिति। खे अन्तरिक्षे अटति गच्छति रक्षार्थ-मिति खेटकम्। तौति। तुः सौत्रो गतौ। विच्। म्रियते। मृङ् प्राण-त्यागे अन्तर्भावितण्यर्थः। अच्। तौश्चासौ मरश्च। तौर्गन्ता म्रि-यते अनेन वा। पुंसीति घः। तोमरम्। परान् शत्रून् शृणातीति परशुः। शृ हिंसायाम्। पश्यते वध्यतेऽनेनेति पाशः। पश बन्धने घञ्॥ ११॥ कुं शरीरमुनत्तीति कुन्तः। स चासावायुधं च तत्। उन्दी क्लेदने। बाहुलकात्तः, शकन्ध्वादिः। त्रयः शूला यस्मिन्निति त्रिशूलम्। शृङ्गस्य विकारः शार्ङ्गम्। न उत्तमं यस्मात्तदनुत्तमम्। शार्ङ्गं च तदायुधं चेति॥ १२॥

ताः सप्त मातरः शङ्खं चक्रमित्याद्यायुधानि किमर्थमित्थं धारय-न्तीत्याह—

**दैत्यानां देहनाशाय भक्तानामभयाय च।**
**धारयन्त्यायुधानीत्थं देवानां च हिताय वै॥ १३॥**

दैत्यानामिति। दैत्यानां देहनाशार्थं भक्तानामभयार्थं देवानां च हितार्थमभिलषितप्राप्तये चेत्यर्थः। अयं भावः। अप्रार्थिता अप्येता-महत्यो देवता जगद्रक्षणे वत्सलतयैव प्रवृत्ताः। मातृवत्ताः कुतो न मन्दभाग्यैः स्वरक्षणार्थं प्रार्थ्यन्त इति॥ १३॥

कवचपाठस्यादाविमं मन्त्रं पठित्वा पश्चात्कवचं पठनीयमित्या-

शयेन स्वरक्षार्थं देव्यः प्रार्थनीया इति देवीं संबोधयन्प्रार्थयेते-त्याह–

**महाबले महोत्साहे महाभयविनाशिनि ।**
**त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥१४॥**

महाबले इति । महद्बलं मायाशक्तिरूपं यस्याः सा । महानुत्साहो जगद्रक्षणे यस्याः सा । महाभयं मृत्युरूपं तस्य ज्ञानदानेन नाशयितुं शीलमस्याः सा । दीव्यति क्रीडति द्योतते रोचते सर्वत्रेति देवी । दुःखेन बहुतपश्चादिकृच्छ्रेण प्रेक्षितुमर्हा, दुर्दर्शनीया । न सदृशे तिष्ठति रूपमस्येति श्रुतेः । शत्रूणां कामक्रोधादीनां, विपक्षाणां वा भयं वर्धयतीति । तत्तत्संबुद्धौ रूपाणि । दुर्गे, त्वमेतादृशगुणोपेता त्राहि मां पालयेत्यर्थः ॥ १४ ॥

**प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।**
**दक्षिणे रक्ष वाराहि नैर्ऋत्यां खड्गधारिणी ॥१५॥**

पूर्वमात्मरक्षाप्रार्थनानन्तरं दिग्रक्षामाह–प्राच्यामिति । प्राच्यां दिशि । स्थिता ऐन्द्री मां रक्षत्वित्यर्थः । प्राच्यां स्थितं मामिति वा । एवमुत्तरत्रापि । शक्तिशक्तिमतोरभेदादग्निरूपा देवताग्निशक्तिरित्यर्थः । अत्र रक्षत्वित्यनुवृत्तिः । आग्नेय्यामग्निदिशि । वाराही । वरानाहन्तीति वराहो यमः । अन्येभ्यो दृश्यत इति डः । तस्य शक्तिर्वाराही । अणन्तान्ङीप् । यमशक्तिरित्यर्थः । दशादिक्पालप्रकरणात् । सप्तमात्रन्तर्गता वाराहीति वा । हे वाराहि, दक्षिणदेशे स्थिता त्वं मां रक्षेत्यर्थः । स्थितं मामिति वा । खड्गधारिणी निर्ऋतिशक्तिः । नैर्ऋत्यां दिशि रक्षत्वित्यर्थः ॥ १५ ॥

**प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ।**
**रक्षेदुदीच्यां कौमारी ईशान्यां शूलधारिणी ॥१६॥**

प्रतीच्यामिति । प्रतीच्यां दिशि वारुणी वरुणशक्ती रक्षेत् रक्षां कुर्यात् । आशिषि विधिसंभावना, आर्षत्वात् । रक्षत्वित्यर्थः । मृगवाहिनी । वायुदेवताया मृगवाहनत्वाद्वायुशक्तिरित्यर्थः । रक्षेदित्यनुवृत्तिः । कौमारी । कुत्सितो मारो मदो यस्य स कुमारः कुबेरः । तस्येयं शक्तिः कौमारी दिक्पालप्रकरणात् । यद्यपि कौबेर्या रक्षणस्थानमग्रे वक्ष्यमाणमस्ति तथाप्येकस्या एव स्थानद्वयरक्षकत्वे बाधकाभावः । सप्तमात्रन्तर्गता वा । शूलधारिणी ईशानशक्तिरीशान्यां दिशि रक्षत्वित्यर्थः ॥ १६ ॥

ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ॥ १७ ॥

ऊर्ध्वमिति । हे ब्रह्माणि ब्रह्मशक्ते, ऊर्ध्वं स्थिता भवती मां रक्षेदित्यर्थः । मे ऊर्ध्वं भागमिति वा । ब्रह्माणमानयति जीवयतीति कर्मण्यणि रूपम् । तथा अधस्तादधः स्थाने वैष्णवी विष्णुशक्तिः रक्षतु । अधरशब्दात् अस्तातिप्रत्यये अधस्तादिति । दशदिक्पालदेवतावदेव । मे इति शेषः । एवं पूर्वोक्तप्रकारेण शववाहना चामुण्डा दश दिशो दश दिक्पालदिशो मे मत्संबन्धिनी रक्षेदिति पर्यवसितोऽर्थः । अन्यथा केवलदिशां रक्षणे प्रयोजनाभाव इति ॥ १७ ॥

दशदिक्षु रक्षार्थं देवीं संप्रार्थ्येदानीं स्वसमीपचतुर्भागेषु देवीं स्थातुं प्रार्थयते-

जया मे चाग्रतः स्थातु विजया स्थातु पृष्ठतः ।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ १८ ॥

जयेति । जया शक्तिः मत्संरक्षणार्थं अग्रतोऽग्रे स्थातु तिष्ठतु । आर्षः प्रयोगः । अन्यत्स्पष्टम् । जयति रिपून्यस्याः प्रसादादिति जया । विशेषेण जयतीति पूर्ववत् । न केनापि जिता अजिता । न

कदाचित्पराभवो भङ्गोऽस्याः साऽपराजिता । अपरैः शत्रुभिर्जेतुमशक्येत्यर्थः ॥ १८ ॥

एवं परितो रक्षार्थं देवीं प्रार्थ्येदानीं शिखाप्रभृतिसर्वाङ्गरक्षार्थं देवीं प्रार्थयते—

शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ १९ ॥

शिखामिति । उद्योतिनी उद्द्योतयति प्रकाशयति लोकान्सर्वैश्वर्येणेत्युद्द्योतिनी नामिका देवी मम शिखायां स्थिता सती मच्छिखां रक्षेदिति प्रत्यवयवं सर्वत्र योजनीयम् । उमेति तपसो निषिद्धत्वात् । 'उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम' इति निरुक्ता । वा उः ईश्वरः । उकारः शंकरः प्रोक्त इति कोशात् तं माति मानयति पतित्वेनेत्युमा । सा मूर्ध्नि व्यवस्थिता सती मूर्धानं रक्षेदित्यर्थः । एवं यथायोग्यं सर्वत्राध्याहार्यम् । मालाधरी मुण्डमालाधरी ललाटे स्थिता, तं रक्षेदिति । यशो विद्यते यस्याः सा । भ्रुवौ भ्रूद्वयं रक्षेदिति ॥ १९ ॥

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २० ॥

त्रिनेत्रेति । त्रीणि नेत्राणि यस्याः सा भ्रुवोर्मध्ये स्थिता तं रक्षतु । यमा द्वादश योगशास्त्रप्रसिद्धा घण्टावद् घोषरूपेण प्राप्तये यस्याः सा । नासिके नासापुटे इत्यर्थः । उत्तरत्र नासिकाशब्देन नासादण्ड इति । शङ्खोऽस्या अस्तीति सा चक्षुषोर्नेत्रयोर्मध्ये रक्षतु । श्रोत्रयोर्द्वारवासिनी रक्षेदिति । द्वारशब्दश्छिद्रोपलक्षणस्तस्मिन्वायुरूपेण वासो विद्यतेऽस्याः ॥ २० ॥

कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी ।

**नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका॥२१॥**

कपोलाविति। कलयति पीडयति दैत्यानिति। वा कलयति जनाञ्ज्ञानाकर्मसु प्रेरयतीति काली सैव कालिका। कपोलौ रक्षेत्। कर्णयोर्मूले। शं सुखं करोतीति शंकरः तस्येयं शक्तिः शांकरी रक्षेदिति। सुष्ठु गन्धः शरीरे यस्याः सा। नासिकायां रक्षेत्। चर्च्यते पूज्यते स्वकामाप्तये जनैरिति चर्चिका। चर्च पूजने। उत्तरोष्ठे ऊर्ध्वोष्ठभागे तस्मिन्‌रक्षतु॥ २१॥

**अधरे चामृतकला जिह्वायां च सरस्वती।**
**दन्तान्‌रक्षतु कौमारी कण्ठमध्ये च चण्डिका॥२२॥**

अधर इति। अमृतं कला पोडशांशो यस्याः सा। यद्वा अमृतस्य कला भक्तपालनार्थमिति। अमृतकला अधरे अधरोष्ठे रक्षतु। सरः प्रसरणं विद्यते यस्याः सा सरस्वती जिह्वायां रक्षतु। कु ईषन्मारः कुमारः स्वामिकार्त्तिकेयः। वा कौ पृथिव्यां मारयति जनानिति कौमारी। अलुक् समासः। सा दन्तान्‌रक्षतु। चण्डते इति चण्डिका। ण्वुल्, पचाद्यच्। कण्ठमध्ये रक्षतु॥ २२॥

**घण्टिकां चित्रघण्टा च महामाया च तालुके।**
**कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला॥ २३॥**

घण्टिकामिति। चित्राऽद्भुता अद्भुतगुणवती घण्टा यस्याः सा। अद्भुतत्वे हेतुः। स्वनेनैव भक्ताभक्तविवर्द्धिनी सा चित्रघण्टा घण्टिकां गलशुण्डिकां रक्षेदिति। विश्वं माति यस्यां सा माया महती चासौ माया चेति सा तालुके तालुदेशे रक्षेत्। कामाक्षी कामानि कमनीयान्यक्षाणीन्द्रियाणि यस्याः सा कामरूपपीठाधिष्ठात्री चिबुकं अधराधोभागं रक्षेत्। सर्वेषां मङ्गलं कल्याणं यस्याः सा सर्वमङ्गला वाचं वाणीं रक्षेदिति॥ २३॥

